❀ ॐ नमः शिवाय ❀

# अथ वेदसाराख्य श्री शिवसहस्रनाम स्तोत्रम्



## ( शिवकवचसहिता च )

संकलकः—

पं० काशीनाथ शर्मा गौड़,

त्रिलोचनघाट—वाराणसी–१

प्राप्तिस्थलः—

श्रीराजराजेश्वरी पुस्तकालय,

कालभैरवमार्ग-वाराणसी–१

मूल्यम्—५)०० रूप्यकाणि ।

❀ ॐ नमः शिवाय ❀

# अथ वेदसाराख्य श्री शिवसहस्रनाम स्तोत्रम्



## ( शिवकवचसहिता च )

संकलकः—

पं० काशीनाथ शर्मा गौड़,

त्रिलोचनघाट—वाराणसी-१

प्राप्तिस्थलः—

श्रीराजराजेश्वरी पुस्तकालय,

कालभैरवमार्ग-वाराणसी-१

मूल्यम्—५)०० रूप्यकाणि ।

## पुस्तकोपयोगिता

इस वेद मंत्रयुक्त-वेदसाराख्य शिवसहस्रनाम स्तोत्र का पाठ-करने से रुद्रीपाठ-वेदपाठ के समान फल प्राप्त होता है। इस स्तोत्र के पठन मात्र से शत्रु-बाधा-ग्रहबाधा-कूष्माण्डग्रह बाधा-देवी-ग्रहबाधा-महामारीकष्ट-विनायकादिबाधा-भैरव-प्रेत-यक्ष-राक्षस-ब्रह्मराक्षस बाधा का नाश होता है तथा मनुष्य को सुख-शान्ति-समृद्धि प्राप्ति के साथ-साथ सन्तान-सुख-पुत्र-पौत्र-कुटुम्ब की रक्षा-होती है। आयुवृद्धिकारक-सर्वरोगनाशक-शत्रुनाशक-युद्ध में विजय-प्रद इस स्तोत्र का पाठ सर्वदा मंगलकारी है।

विशेष—मोक्ष की कामना के लिये प्रति नाम से घृत की आहुति। पुत्रकामना के लिये तिल-घी की आहुति। आयुवृद्धि की कामना के लिये घृत-मधु की आहुतिं करने से अश्व-मेधादियज्ञीय फल, कपिला गौ के दान का फल, कोटि कन्या दानादि के समान फल प्राप्त होता है। महाराज रामचन्द्र द्वारा दण्डकारण्य वन में सेवित इस सहस्रनाम का पाठ सर्वदा सुख-समृद्धि दाता-कल्याणकारी है।

—काशीनाथ शर्मा गौड़

❀ श्रीगणेशाय नमः ❀

# अथ श्री शिवकवच प्रारंभः

न्यासादिविधिः–विनियोगः—ॐ अस्य श्री शिवकवचस्तोत्रमन्त्रस्य ऋषभयोगीश्वर-ऋषिः अनुष्टुप्छन्दः, श्रीसदाशिवरुद्रो देवता। हां बीजं। हींशक्तिः। हं कीलकं। ह्रीं श्रीं क्लीं बीजं। साम्बसदाशिवप्रीत्यर्थे शिवकवचस्तोत्र जपे विनियोगः।

अथन्यासः–ॐ नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं ॐ अंगुष्ठाभ्यां नमः। ॐ नं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं नं तर्जनीभ्यां नमः। ॐ मः नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं मः मध्यमाभ्यां नमः। ॐ शिं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं शिं अनामिका-

भ्यां नमः । ॐ वां नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं वां कनिष्ठिकाभ्यां नमः । ॐ यं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं यं करतलकर पृष्ठाभ्यां नमः ॥

अथ हृदयादि न्यासः—ॐ नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं ॐ हृदयाय नमः । ॐ नं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामलिने ॐ ह्रीं श्रीं क्लीं नं शिरसे स्वाहा । ॐ मः नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं मः शिखायैवषट् । ॐ शिं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वलामालिने ॐ ह्रीं श्रीं क्लीं शिं कवचाय हुं । ॐ वां नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वाला-

मालिने ॐ ह्रीं श्रीं क्लीं वां नेत्रत्रयाय वौषट् ॥ ॐ यं नमो भगवते महारुद्राय ज्वलज्ज्वलज्ज्वालामालिने ॐ ह्रीं श्रीं क्लीं यं इत्यस्त्रायफट् । ( इति न्यासः ) ।

ॐ भूर्भुवः स्वः इति दिग्बंधः । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । ॐ नमः शिवायेति मंत्र जपः अष्टोत्तरशतं ( १०८ ) सहस्रं वा ( १००८ ) ॥

अथ ध्यानम्—वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम् ।
सहस्रकरमत्युग्रं वन्दे देवं उमापतिम् ॥१॥
अतःपरं सर्वपुराणगुह्यं निःशेष पापौघहरं पवित्रम् ।
जयप्रदं सर्वविपत्तिमोचनं, वक्ष्यामि शैवं कवचं हिताय ते ॥ २ ॥

———

## श्री शिवकवचप्रारम्भः

ऋषभ उवाच—

नमस्कृत्वा महादेवं विश्वव्यापिनमीश्वरम् ।
वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ॥१॥
शुचौ देशे समासीनो यथावत्कल्पितासनः ।
जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम् ॥२॥
हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम् ।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम् ॥३॥
ध्यानावधूताखिलकर्मबन्धश्चिरं चिदानन्दनिमग्नचेताः ।
षडक्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम् ॥४॥
मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे ।
तन्नाम दिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ॥५॥

सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानन्दघनश्चिदात्मा ।
अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥६॥
यो भूस्वरूपेण विभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः ।
योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः ॥७॥
कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः ।
स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥८॥
प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः ।
चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितो रक्षतु मामजस्रम् ॥९॥
कुठारवेदांकुशपाशशूल कपालढक्काक्षगुणान्दधानः ।
चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥१०॥
कुन्देन्दुशंखस्फटिकावभासो वेदाक्षमालावरदाभयाङ्कः ।
त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योऽधिजातोऽवतु मां प्रतीच्याम् ॥११॥

वराक्षमालाभयटंकहस्तः सरोजकिञ्जल्कसमानवर्णः ।
त्रिलोचनश्चारु चतुर्मुखो मां, पायादुदीच्यां दिशि वामदेवः ॥१२॥
वेदाभयेष्टङ्कुशपाशटङ्ककपालढक्काक्षकशूलपाणिः ।
सितद्युतिः पंचमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः ॥१३॥
मूर्धानमव्यान्मम चन्द्रमौलिर्भालं ममाव्यादथ भालनेत्रः ।
नेत्रं ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥१४॥
पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली ।
वक्त्रं सदा रक्षतु पंचवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥१५॥
कण्ठं गिरीशोऽवतु नीलकण्ठः पाणिद्वयं पातु पिनाकपाणिः ।
दोर्मूलमव्यान्मम धर्मबाहुर्वक्षस्थलं दक्षमखान्तकोऽव्यात् ॥१६॥
ममोदरं पातु गिरीन्द्रधन्वा मध्यं ममाव्यान्मदनान्तकारी ।
हेरम्बतातो मम पातु नाभिं पायात्कटिं धूर्जटिरीश्वरो मे ॥१७॥

ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् ।
जंघायुगं पुङ्गवकेतुरव्यात् पादौ ममाव्यात्सुरवन्द्यपादः ॥१८॥
महेश्वरः पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः ।
त्रिलोचनः पातु तृतीययामे वृषध्वजः पातु दिनान्तयामे ॥१९॥
पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीथे ।
गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥२०॥
अन्तःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु बहिःस्थितं माम् ।
तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात् ॥२१॥
तिष्ठन्तमव्याद्भुवनैकनाथः पायाद्व्रजन्तं प्रमथाधिनाथः ।
वेदान्तवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम् ॥२२॥
मार्गेषु मां रक्षतु नीलकण्ठः शैलादिदुर्गेषु पुरत्रयारिः ।
अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥२३॥

कल्पान्तकाटोपपटुप्रकोपः स्फुटाट्टहासोच्चलिताण्डकोशः ।
घोरारिसेनार्णवदुर्निवार महाभयाद्रक्षतु वीरभद्रः ॥२४॥
पत्त्यश्वमातंगघटावरूथ सहस्रलक्षायुतकोटिभीषणम् ।
अक्षौहिणीनां शतमाततायिनां छिन्द्यान्मृडो घोरकुठारधारया ॥२५॥
निहन्तु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य ।
शार्दूलसिंहर्क्षवृकादिहिंस्रान् सन्त्रासयत्वीशधनुः पिनाकः ॥ २६ ॥
दुःस्वप्नदुःशकुनदुर्गतिदौर्मनस्य दुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि ।
उत्पाततापविषभीतिमसद्ग्रहार्तिंव्याधींश्च नाशयतु मे जगतामधीशः।

अथमन्त्र प्रारम्भः—ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सकलतत्त्वविहराय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकललोकैकहर्त्रे सकललोकैकगुरुवे सकललोकैकसाक्षिणे सकलनिगम-

गुह्याय सकलवरप्रदाय सकलदुरितार्तिभंजनाय सकलजगदभयं
कराय सकललोकैकशंकराय शशांकशेखराय शाश्वतनिजाभासाय
निर्गुणाय निरुपमाय निरूपाय निराभासाय निरामयाय निष्प्रपंचाय
निष्कलंकाय निर्द्वन्द्वाय निःसंगाय निर्मलाय निर्गमाय नित्यरूप-
विभवाय निरुपमविभवाय निराधाराय नित्यशुद्धबुद्धपरिपूर्ण-
सच्चिदानन्दद्वयाय परमशान्तप्रकाशतेजोरूपाय जय जय महारुद्र
महारौद्र भद्रावतार दुःखदावदारण महाभैरव कालभैरव कल्पान्तभैरव
कपालमालाधर खट्वांगखड्ग चर्म्मपाशांकुशडमरुशूलचापबाण-
गदाशक्तिभिण्डिपाल तोमरमुसलमुद्गर पट्टिशपरशुपरिघ भुशुण्डी-
शतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकराल विकटाट्टहास-
विस्फारितब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रहार नागेन्द्र
वलय नागेन्द्रचर्मधर मृत्युञ्जय त्र्यंबक त्रिपुरान्तक विरूपाक्ष विश्वे-

श्वर विश्वरूप वृषभवाहन विषभूषण विश्वतोमुख सर्वतो रक्ष मां ज्वल ज्वल महामृत्युभयमपमृत्युभयं नाशय नाशय रोगभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चौरान्मारय मारय ममशत्रूनुच्चाटयोच्चाटय शूलेन विदारय कुठारेण भिन्धि भिन्धि खड्गेन छिन्धि छिन्धि खट्वांगेन विपोथय विपोथय मुसलेन निष्पेषय निष्पेषय बाणैः सन्ताडय सन्ताडय रक्षांसि भीषय भीषय भूतानि विद्रावय विद्रावय कूष्माण्डवेतालमारीगणब्रह्मराक्षसान्सन्त्रासय सन्त्राशय ममाभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय नरकभयान्मामुद्धारयोद्धारय संजीवय संजीवय क्षुत्तृड्भ्यां मामाप्यायाप्यायय दुःखातुरं मामानन्दयानन्दय शिवकवचेन मामाच्छादयाच्छादय त्र्यम्बक सदाशिव नमस्ते नमस्ते नमस्ते॥

( फलस्तुति ) ऋषभ उवाच—

इत्येतत्कवचं शैवं वरदं व्याहृतं मया । सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम ॥२८॥

यः सदा धारयेन्मर्त्यः शैवं कवचमुत्तमम् । न तस्य जायते क्वापि भयं शंभोरनुग्रहात् ॥२९॥
क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपि वा । सद्यः सुखमवाप्नोति दीर्घमायुश्च विन्दति ॥३०॥
सर्वदारिद्र्यशमनं सौमंगल्यविवर्द्धनम् । योऽधीते कवचं शैवं स देवैरपि पूज्यते ॥३१॥
महापातकसंघातैर्मुच्यते चोपपातकैः । देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः ॥३२॥
त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम् । धारयस्व मयादत्तं सद्यः सुखमवाप्स्यसि ॥३३॥

सूत उवाच—

इत्युक्त्वा ऋषभो योगी तस्मै पार्थिव सूनवे । ददौ शंखं महारावं खड्गचारिनिषूदनम् ॥३४॥
पुनश्च भस्म संमंत्र्यं तदंगं परितोऽस्पृशत् । गजानां षट्सहस्रस्य द्विगुणस्य बलं ददौ ॥३५॥
भस्मप्रभावात्संप्राप्त बलैश्वर्यधृतिस्मृतिः । स राजपुत्रः शुशुभे शरदर्क इव श्रिया ॥३६॥
तमाह प्रांजलिं भूयः सयोगी नृपनंदनम् । एष खड्गो मया दत्तस्तपोमंत्रानुभावितः ॥३७॥
शितधारमिमं खड्गं यस्मैदर्शयसे स्फुटम् । स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम् ॥३८॥
अस्य शंखस्य निर्ह्रादं ये शृण्वन्ति तवाहिताः । ते मूर्च्छिता पतिष्यंति न्यस्तशस्त्रा विचेतनाः ॥३९॥
खड्गशंखाविमौ दिव्यौ परसैन्यविनाशिनी । आत्मसैन्यस्य पक्षाणां शौर्यतेजो विवर्धनै ॥४०॥
एतयोश्च प्रभावेण शैवेन कवचेन च । द्विषट्सहस्रनागानां बलेन महतापि च ॥४१॥
भस्मधारण सामर्थ्याच्छत्रुसैन्यं विजेष्यसि । प्राप्य सिंहासनं पित्र्यं गोप्तासिपृथिवीमिमाम् ॥४२॥
इति भद्रायुषंसम्यगनुशास्य समातृकम् । ताभ्यां संपूजितः सोऽथ योगीस्वैरगतिर्ययौ ॥४३॥

॥ इति स्कंदपुराणे ब्रह्मोत्तरखण्डे शिवकवचं समाप्तम् ॥

श्रीगणेशाय नमः ॥ ॐ नमः शिवाय ॥

# ॥ अथ शिवसहस्रनामप्रारभ्यते ॥

व्यास उवाच—

एकदा मुनयः सर्वे द्वारिकां द्रष्टुमागतः । वासुदेवं च सोत्कण्ठाः कृष्णदर्शनलालसाः ॥१॥
ततस्तु भगवान् प्रीतः पूजां चक्रे यथाविधिः । तेषामाशीस्तवो गृह्य बहुमानपुरःसरम् ॥२॥
तैः पृष्ठः कथयामासं कुमारप्रभृतं च यत् । चरितं भूभिमारघ्नं लोकानन्दकरं परम् ॥३॥
मार्कण्डेयमुखाः सर्वे माध्यान्हिक क्रियोत्थिताः । कृष्णःस्नानः सथो चक्रे मृदाक्षतकुशादिभिः ॥४॥
सूर्योपस्थानसंन्ध्यां च स्मृतिधर्ममनुस्मरन् । शिवपूजां ततः कृष्णो गंधपुष्पाक्षतादिभिः ॥५॥
चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् । जयशंकर सोमेश रक्ष रक्षेति चाब्रवीत् ॥६॥
जजाप शिवसाहस्रंभुक्तिमुक्तिप्रदं विभोः । अनन्यमानसः शान्तः पद्मासनपरः शुचिः ॥७॥
ततस्ते विस्मयापन्ना दृष्ट्वा कृष्णविचेष्टितम् । मार्कण्डेयोऽवदत्कृष्णं बहुशो मुनिपुंगवः ॥८॥

मार्कण्डेय उवाच—

त्वं विष्णुः कमलाकान्तः परमात्मा जगद्गुरुः । तव पूज्यः कथं शंभुरेतत्सर्वं वदस्व मे ॥९॥

व्यास उवाच—

अथ ते मुनयः सर्वे मार्कण्डेयं समर्चयम् । वचोभिर्वासुदेवस्य पृष्टं साधु त्वयेति च ॥१०॥

श्रीकृष्ण उवाच—

साधु साधु मुने पृष्टं हिताय सकलस्य च । अज्ञात तव नास्त्येवं तथापि च वदाम्यहम् ॥११॥
दैवतं सर्वदेवानां सर्वकारणकारणम् । ज्योतिर्यत्परमानन्दं सावधानमतिः श्रृणु ॥१२॥
विश्वसाधनमीशानं गुणातीतमजं परम् । जगतस्तस्थुषोश्चात्मा ममम्लं महामुने ॥१३॥

यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः । स शिवः स महादेवः शंकरश्च निरंजनः ॥१४॥
तस्मान्नान्यपरो देवस्त्रिषु लोकेषु विद्यते । सर्वज्ञः सर्वगः शम्भुः सर्वात्मा सर्वतोमुखः ॥१५॥
पठ्यते सर्ववेदान्ते सिद्धान्ते यो मुनीश्वरैः । तस्मिन्भक्तिर्महादेवे मम धातुश्च निर्मला ॥१६॥
महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः । सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥१७॥
निर्विकल्पो निराभासो निःसंगो निरुपद्रवः । निर्लेपः पुरुषाध्यक्षो महापुरुष ईश्वरः ॥१८॥
तस्यचेच्छाभवत्पूर्वं जगस्थित्यन्तकारिणी । वामांगाद्भवस्तस्य सोऽहं विष्णुरिति स्मृतः ॥१९॥
जनयामास धातारं दक्षिणांगात्सदाशिवः । मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥२०॥
तपस्तपन्तु भो वत्सा अब्रुवीदिति ताञ्छिवः । ततस्तो शिवात्मानं प्रोचुः संयतमानसाः ॥२१॥
स्तुत्वा तु विविधैः स्तोत्रैः प्रणम्य च पुनः पुनः ।

ब्रह्मविष्णुमहेश्वरा ऊचुः—

तपः केनप्रकारेण कर्त्तव्यं परमेश्वर ॥२२॥ ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सिनापरः ॥

शिव उवाच—

कायेन मनसावाचा ध्यानपूजा जपादिभिः ॥२३॥ कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥

देवा ऊचुः—

त्वया यत्कथितं शंभो दुर्ज्ञेयमाजितात्मभिः ॥२४॥ सौम्योपायमतो ब्रह्मन् वद कारुण्यवारिधे ॥

शिव उवाच— सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥२५॥

यथा संसारमग्नानांमुक्तिर्भवति शाश्वती । शृण्वन्तु तद्विधानं हि महापातकनाशनम् ॥२६॥

पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी। ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः॥२७॥
भस्मधारी मुनिर्मौनी पद्मासनसमन्वितः। ध्यात्वा मां सकलाधीशं निराकारं मुनीश्वरम्॥२८॥
पार्वतीसहितं-शिव ध्यानम् ( २९ से ३९श्लोकपर्यन्त )—
पार्वतीसहितं शर्वं जटामुकुटमंडितम्। वसानं चर्म्मवैयाघ्रं चन्द्रार्धकृतशेखरम् ॥२९॥
त्र्यम्बकं वृषभारूढं कृत्तिवाससमुज्ज्वलम्। सुरार्चितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥३०॥
बिभ्राणं सुप्रसन्नं च कुठारे च वराभयान्। दुर्द्धर्षं कमलासीनं नागयज्ञोपवीतिनम् ॥३१॥
विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम्। सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥३२॥
सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम्। जगद्योनिमजं ब्रह्मशिवमाद्यं सनातनम् ॥३३॥
दंष्ट्राकरालदुष्प्रेक्ष्यं सूर्यकोटिसमप्रभम्। निशाकरकराकारं भेषजं भवरोगिणाम् ॥३४॥
पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम्। कालात्मानं कालकालं देवदेवं महेश्वरम् ॥३५॥
ज्ञानवैराग्यसंपन्नं योगानन्दमयं परम्। शाश्वतैश्वर्यसम्पन्नं महायोगीश्वरेश्वरम् ॥३६॥
समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम्। तारकं ब्रह्मसम्पूर्णमणीयांसं महत्तमम् ॥३७॥
यतीनां परमं ब्रह्म यतीनां तपसः फलम्। संयमिहृत्समासीनं तपस्विजनसम्पदम् ॥३८॥
विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम्। महादेवं महात्मानं देवानामपि दैवतम् ॥३९॥
दिग्बन्ध-न्यास ( ४० से ५३ तक )—
शान्तं पवित्रमोंकारं ज्योतिषां ज्योतिरुत्तमम्। शंकरो मे शिरःपातु ललाटं भाललोचनः ॥४०॥
विश्वचक्षुर्दृशौ पातु रुद्रो मम भ्रुवावपि। गण्डौ पातु महेशानः श्रुतौ रक्षतु पूर्वजः ॥४१॥
कपोलौ मे महादेवः पातु नासां सदाशिवः। मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः ॥४२॥

दन्तान् रक्षतु देवेन्द्रस्तालु सोमकलाधरः। रसनां परमानन्दः पातु गल्लौ शिवाप्रियः ॥४३॥
चिबुकं पातु मे शम्भु श्मश्रून् शत्रुबिनाशकः। कूर्चं पातु भवः कण्ठं नीलकंठोऽवतु ध्रुवम् ॥४४॥
स्कंधौ स्कन्धपतिर्बाहुं बहुहस्तधरः सदा। उपबाहुं महावीर्य्यः करौ विबुधसत्तमः ॥४५॥
अंगुलीः पातु पञ्चास्यः पर्वाणि च सहस्रपात्। हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥४६॥
उदरं हुतभुक्पातु मध्यं मे मध्यमेश्वरः। कुक्षौ पातु भवानीशः पृष्ठं पातु कुलेश्वरः ॥४७॥
प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः। सक्थिनी पातु मे भर्गो जानुनी जनकाधिपः॥४८॥
जंघे पुररिपुः पातु चरणौ भवनाशनः। शरीरं पातु मे शर्वो बाह्यसाभ्यन्तरं शिवः ॥४९॥
इन्द्रियाणि हरः पातु सर्वत्र जयवर्द्धनः। पूर्वे पातु मृडः पातु दक्षिणे यमसूदनः ॥५०॥
वारुण्यां सलिलाधीश उदीच्यां मे महीधरः। ईशान्यां पातु भूतेश आग्नेयां रविलोचनः ॥५१॥
नैऋत्यां भूत्भृत्पातु वायव्यां बलवर्द्धनः। ऊर्ध्वं पातु मखद्वेषी अधः संसारनाशनः ॥५२॥
सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः। एवं न्यासादिकं कृत्वा साक्षाच्छंभुमयो भवेत् ॥५३॥

प्रार्थना श्लोकः-(५४ से ५९ पर्यन्त)—नमो हिरण्य बाहवे इति पठेन्मंत्रं तु भक्तितः।

नमोहिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय। हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमो नमः ॥५४॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः ॥५५॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्रायनमः कालाय नमः कलविकरणाय नमो बलविकरणायनमो बलाय-

नमो बलप्रमथनायनमः । सर्वभूतदमनायनमो मनोन्मनाय नमः ॥ ५६ ॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥५७॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ५८ ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोऽम् ॥ ५९ ॥

नमस्कार मन्त्रः ( ६०–६१ ) ।

सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् । ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥६०॥

सर्वकार्यकरं पुण्यं महापातकनाशनम् । सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ॥६१॥

मन्त्राणां परमं मन्त्रं भवदुःखषडूर्मिहृत् ॥

अथ षडक्षरषडंगन्यासः— ॐ नमः शम्भवाय च हृदयाय नमः । ॐ मयो भवाय च शिरसे स्वाहा । ॐ नमः शंकराय च शिखायै वषट् । ॐ नमो मयस्कराय च कवचायहुं ॥ ॐ नमः शिवाय च नेत्रत्रयाय वौषट् । ॐ नमः शिवतराय च अस्त्रायफट् ॥

नमस्कार–नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने चतुर्मूर्त्तिवपुःस्थाय भूषितांगाय शंभवे ॥

विनियोगः—ॐ अस्य श्रीवेदसाराख्यपरमदिव्यशिवसहस्रनामस्तोत्रमन्त्रस्य नारायण ऋषिः अनुष्टुप छन्दः । सदाशिवो देवता । ॐ नमः इति बीजम् । शिवायेतिशक्तिः ।

ॐ कोटिसूर्यप्रतीकाशं त्रिनेत्रं चन्द्रशेखरम् । शूलटंकगदा चक्रकुन्तपाशधरं विभुम् । ॐ नमः पराय देवाय शंकराय महात्मने । कामिने नीलकण्ठाय निर्म्मलाय कपर्दिने ॥ १ ॥ निर्विकल्पाय शान्ताय निरहंकारिणे नमः । अनर्घ्याय विशालाय शालहस्ताय ते नमः ॥ २ ॥ निरंजनाय शर्वाय निःशंकाय परात्मने । नमः शिवाय भर्गाय गुणातीताय वेधसे ॥ ३ ॥ महादेवाय पीताय पार्वतीपतये नमः । कैवल्याय महेशाय विशुद्धाय बुधात्मने ॥ ४ ॥ कैवल्याय सुधेशाय निस्पृहाय स्वरूपिणे । नमः सोमाय भूपाय कालायामिततेजसे ॥ ५ ॥ अजराय जगत्पित्रे जनकाय पिनाकिने । निराधाराय सिंहाय मायातीताय ते नमः ॥ ६ ॥ बीजाय सर्वभूताय पशूनां पतये नमः । पुरन्दराय भद्राय पुरुषाय महीयसे

॥ ७ ॥ महासन्तोषरूपाय ज्ञानिने शुद्धबुद्धये । बुद्धाय बहुरूपाय ताराय परमात्मने ॥ ८ ॥ पूर्वजाय सुरेशाय ब्रह्मणेऽनन्तमूर्तये । निरक्षराय सूक्ष्माय कैलासपतये नमः ॥ ९ ॥ निरामयाय कान्ताय निराकाराय ते नमः । सकलात्मस्वरूपाय सोऽहंतत्त्वाय ते नमः ॥ निरालम्बाय नित्याय नित्यायाः पतये नमः ॥१०॥ आत्मारामाय भव्याय पूज्याय परमेष्ठिने । विकर्तनाय भीमाय शम्भवे विश्वरूपिणे ॥११॥ हंसाय हंसनाथाय प्रसिद्धाय नमो नमः । परात्पराय रुद्राय भवायालंघ्यशक्तये ॥१२॥ इन्द्रहन्त्रे निधीशाय कालहन्त्रे मनस्विने । विश्वमात्रे जगद्धात्रे जगन्नेत्रे नमो नमः ॥१३॥ जटिलाय विरागाय पवित्राय मृडाय च । निरवद्याय धीराय निरातंकाय ते नमः । नादाय रविनेत्राय व्योमकेशाय ते नमः ॥ १४ ॥ चतुर्भोगाय साराय

योगिनेऽनन्तमायिने । धर्मिष्ठाय वरिष्ठाय पुरत्रयविघातिने ॥१५॥ गरिष्ठाय गिरीशाय वरदाय नमो नमः। व्याघ्रचर्माम्बरायाथ दिशा-वस्त्राय ते नमः ॥ १६ ॥ परमार्थाय मात्राय प्रमथाय स्वचक्षुषे। आद्याय शूलहस्ताय शितिकण्ठाय तेजसे ॥१७॥ उग्राय वामदेवाय श्रीकण्ठाय च ते नमः । विश्वेश्वराय सूर्याय गौरीशाय वराय च ॥१८॥ मृत्युंजयाय वीराय वीरभद्राय ते नमः । कामनाशाय गुरवे मुक्तिनाथाय ते नमः ॥ १९ ॥ विरूपाक्षाय विधये वन्हिनेत्राय ते नमः । जालन्धरशिरश्छेत्रे हविषे हितकारिणे ॥२०॥ महाकालाय वैद्याय घुसृणेशाय ते नमः। नमः ओंकाररूपाय सोमनाथाय ते नमः ॥२१॥ रामेश्वराय शुचये भीमेशाय नमो नमः । त्र्यम्बकाय निरी-हाय केदाराय नमो नमः ॥२२॥ गंगाधराय कवये नागनाथाय ते

नमः । भस्मप्रियाय महसे रश्मीशाय नमो नमः ॥ २३ ॥ पूर्णाय भूतपतये सर्वज्ञाय दयालवे । धर्माय धनदेशाय गजचर्माम्बराय च ॥२४॥ भालनेत्राय यज्ञाय श्रीशैलपतये नमः । कृशानुरेतसे नील-लोहिताय नमो नमः ॥२५॥ अन्धकासुरहन्त्रे च पावनाय बलाय च । चैतन्याय त्रिनेत्राय दक्षनाशकराय च ॥ २६ ॥ नमः सहस्र-शिरसे जयरूपाय ते नमः । सहस्रचरणायाथ योगिहृत्कंजवासिने ॥२७॥ सद्योजाताय वन्द्याय सर्वदेवमयाय च । आमोदाय प्रगल्भाय गायत्रीवल्लभाय च ॥२८॥ व्योमाकाराय विप्राय नमो विप्रप्रियाय च । अघोराय सुवेशाय श्वेतरूपाय ते नमः ॥ २९ ॥ विद्धत्तमाय वक्त्राय विश्वग्रासाय नन्दिने । अधर्मशत्रवे तापदुन्दु-भीमथनाय च ॥३०॥ अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः ।

नमो ब्रह्मशिरश्छत्रे पंचवक्त्राय खड्गिने ॥ ३१ ॥ हरिकेशाय विभवे
पंचवर्णाय वज्रिणे । नमः पंचाक्षरायाथ गोवर्द्धनगताय च ॥३२॥
प्रभवे जनबीजाय कालकूटविषादिने । सिद्धेश्वराय सिद्धाय सहस्र-
वदनाय च ॥ ३३ ॥ नमः सहस्रहस्ताय सहस्रनयनाय च । सहस्र-
मूर्तये तुभ्यं विष्णवे जितशत्रवे ॥ ३४ ॥ काशीनाथाय गोप्त्रे ते
नमस्ते विश्वसाक्षिणे । हेतवे सर्वबीजानां पालकाय नमो नमः ॥३५॥
जगत्संहाराकराय त्रिधावस्थाय ते नमः । एकादशस्वरूपाय नमस्ते
बहुमूर्तये ॥ ३६ ॥ नरसिंहमहादर्पघातिने शरभाय च । भस्माभ्य-
क्तायतीर्थाय जान्हवीजनकाय च ॥ ३७ ॥ देवदानवदैत्यानां
गुरवे ते नमो नमः । दलितांजनभासाय नमो वायुस्वरूपिणे ॥३८॥
नमः स्वेच्छास्वरूपाय प्रसिद्धाय नमो नमः । वृषभध्वजाय गोष्ठ्याय

जगद्यन्त्रप्रवर्तिने ॥ ३९ ॥ अनाथाय प्रजेशाय विष्णुगर्वहराय च । हरिविधातृकलहनाशकाय नमो नमः ॥ ४० ॥ गदाहस्ताय बटवे गगनाय नमो नमः । कैवल्यफलदात्रे ते परमाय नमो नमः ॥४१॥ ज्ञानगम्याय ज्ञानाय घण्टारवप्रियाय च । पद्मासनाय पुष्टया-य निर्वाणाय नमो नमः ॥ ४२ ॥ अयोनये सदेहाय ह्युत्तमाय नमो नमः । अन्तकालाधिपतये विशालाक्षाय ते नमः ॥४३॥ कुबेरबन्धवे तुभ्यं सोमाय सुखिने नमः । अमृतेशाय सौम्याय खेचराय च धन्विने ॥४४॥ प्रियंवदाय दक्षाय वन्दिने विभवाय च । गिरीशाय गिरित्राय गिरिशान्ताय ते नमः ॥ ४५ ॥ पारिजाताय बृहते पंचयज्ञाय ते नमः । तरुणाय विशिष्टाय बालरूपधराय च ॥ ४६ ॥ जीवितेशाय पुष्टाय पुष्टानां पतये नमः । भवहेत्यै हिरण्याय कनिष्ठाय नमो नमः

॥ ४७ ॥ मध्यमाय विधात्रे च शूराय सुभगाय च । आदित्यताप-
नायाथ पुण्यश्लोकाय ते नमः ॥ ४८ ॥ महाह्रदाय ह्रस्वाय वामनाय
नमो नमः । नमस्तत्पुरुषायाथ चतुर्हस्ताय मायिने ॥ ४९ ॥ नमो
धूर्जटये तुभ्यं जगदीशाय ते नमः । जगन्नाथाय महसे लीलाविग्रह-
धारिणे ॥५०॥ अभयाय नमस्तुभ्यममराय नमो नमः । अताम्राय
नमस्तुभ्यमक्षयाय नमो नमः ॥५१॥ लोकाध्यक्ष नमस्तुभ्यमनादि-
निधनाय च । व्यक्तोत्तराय व्यक्ताय नमस्ते परमाणवे ॥ ५२ ॥
लघवे स्थूलरूपाय नमः परशुधारिणे । नमः खट्वांगहस्ताय
नागहस्ताय ते नमः ॥५३॥ वरदाभयहस्ताय घंटाहस्ताय ते नमः ।
घस्मराय नमस्तुभ्यमजिताय नमो नमः ॥५४॥ अणिमादिगुणेशाय
पंचब्रह्ममयाय च । पुरातनाय शुद्धाय बलप्रमथनाय च ॥ ५५ ॥

पुण्योदयाय पद्माय विमुक्ताय नमो नमः । उदाराय विचित्राय विचि-
त्रगतये नमः ॥ ५६ ॥ वाग्विशुद्धाय चितये निर्गुणाय नमो नमः ।
परमेशाय शेषाय नमः परतराय च ॥ ५७ ॥ महेन्द्राय सुशीलाय
करवीरप्रियाय च । महापराक्रमायाथ नमस्ते कालरूपिणे ॥ ५८ ॥
विष्टरश्रवसे लोकचूडारत्नाय ते नमः । सम्राजे कल्पवृक्षाय करुणाय-
नटाय च ॥५९॥ अनर्घ्याय वरेण्याय वज्ररूपाय ते नमः । परमज्यो-
तिषे पद्मगर्भाय सलिलाय च ॥ ६० ॥ तत्त्वाधिकाय तत्त्वाय नमो
दीर्घाय रंगिणे । नमस्ते पांडुरंगाय घोराय ब्रह्मचारिणे ॥६१॥
अणवे निष्कलायाथ सामगानप्रियाय च । नमोऽक्षयाय क्षेत्राय
नमस्ते पुण्यमूर्तये ॥६२॥ कलाधराय पूज्याय पंचभूतात्मने नमः ।
निर्वाणाय च तथ्याय पापनाशकराय च ॥६३॥ विश्वतश्चक्षुषे कालयो-

गिनेऽनन्तरूपिणे । सिद्धसाधकरूपाय नमो मेदिनिरूपिणे ॥ ६४ ॥
अगण्याय प्रतापाय सुधाहस्ताय ते नमः । श्रीवल्लभाय निधये
स्थाणवे मधुराय च ॥ ६५ ॥ उपाधिरहितायाथ नमः सुकृतराशये ।
नमो मुनीश्वरायाथ शिवानन्दाय ते नमः ॥६६॥ रिपुघ्नाय नमस्ते-
जोराशयेऽनुत्तमाय च । चतुर्मूर्तिवपुःस्थाय नमो बुद्धीन्द्रियात्मने
॥ ६७ ॥ उपद्रवहरायाथ प्रियसन्दर्शनाय च । भूतनाथाय भूताय
वीतरागाय ते नमः ॥६८॥ नैष्कर्म्याय निरूपाय षड्वक्त्राय विशु-
द्धये। कूलेशाय भूतभृते भुवनेशाय ते नमः ॥६९॥ हिरण्यबाहवे जीव
वरदाय नमो नमः । आदिदेवाय भर्गाय चन्द्रसंजीवनाय च ॥७०॥
हराय बहुरूपाय प्रसन्नाय नमो नमः । आनन्दभरितायाथ कूटस्थाय
नमो नमः ॥ ७१ ॥ नमो मोक्षफलायाथ शाश्वताय विरागिणे ।

यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥७२॥ नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः । विश्वगर्भाय गर्भाय वेदगर्भाय ते नमः ॥७३॥ संसारार्णवमग्नानां दुःखसंसारहेतवे । मुनिप्रियाय जीवाय मूलप्रकृतये नमः ॥७४॥ समस्तबन्धवे तेजोमूर्तये ते नमो नमः । आश्रमस्थापकाय वर्णिने सुन्दराय च ॥७५॥ मृगबाणार्पणायाथ शारदावल्लभाय च । विचित्रमायिने तुभ्यमलंकरिष्णवे नमः ॥७६॥ बहिर्मुखमहादर्पमथनाय नमो नमः । नमोऽष्टमूर्तये तुभ्यं निष्कलंकाय ते नमः ॥ ७७ ॥ नमो हव्याय भोज्याय यज्ञनाथाय ते नमः । नमो मध्याय मुख्याय वसिष्ठाय नमो नमः ॥ ७८ ॥ अंबिकापतये तुभ्यं महादन्ताय ते नमः । सत्यप्रियाय सत्याय प्रियनृत्याय ते नमः ॥७९॥ नित्यतृप्ताय वेदित्रे मृगहस्ताय ते नमः । अर्द्धनारीश्वरायाथ कुठार-

युतपाणये ॥ ८० ॥ वराभयप्रदात्रे ते बहुरूपाय ते नमः । महार्थाय सुसत्त्वाय कीर्तिस्तम्भाय ते नमः ॥८१॥ नमः कृतगमायाथ वेदान्तपठिताय च । अश्रोत्राय श्रुतिमते बहुश्रुतितराय च ॥ ८२ ॥ अघ्राणाय नमस्तुभ्यं गन्धावग्रहकारिणे । पादहीनाय बोढाय सर्वत्रगतये नमः ॥८३॥ अक्षाय जननेत्राय नमस्तुभ्यं चिदात्मने । रसज्ञाय नमस्तुभ्यं रसनारहिताय च ॥८४॥ अमूर्तायाथ मूर्ताय सदसस्पतये नमः । जितेन्द्रियाय तथ्याय परंज्योतिःस्वरूपिणे ॥८५॥ नमस्ते सर्वमर्त्यानामादिकर्त्रे दयालवे । सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥ ८६ ॥ नमोऽन्तर्यामिणे सर्व हृदिस्थाय नमो नमः । चक्रभ्रमणकर्त्रे ते पुराणाय नमो नमः ॥ ८७ ॥ वामदक्षिणपार्श्वाय लोकेश हरिशालिने । नमः सकलकल्याणदायिने प्रसवाय च ॥८८॥

स्वभावोदारधीराय सूत्रकाराय ते नमः । विषयार्णवमग्नानां समुद्धरणसेतवे ॥ ८९ ॥ अस्नेहस्नेहरूपाय वार्त्तातिक्रान्तवर्तिने । यत्र सर्वं यतः सर्वं सर्वं यत्र नमो नमः ॥ ९० ॥ नमो महार्णवायाथ भास्कराय नमो नमः । भक्तिगम्याय भक्तानां सुलभाय नमो नमः ॥९१॥ दुष्प्रधर्षाय दुष्टानां विज्ञेयाय विवेकिनाम् । अलौकिकाय लोकाय ह्यलोकाय नमो नमः ॥ ९२ ॥ पूरयित्रे विशेषाय कुशलाय शुभाय च । नमः कर्पूरगौराय सर्पहाराय ते नमः ॥ ९३ ॥ तमः संसारपाराय कमनीयाय ते नमः । वन्हिदर्पविघाताय वायुदर्पविघातिने ॥ ९४ ॥ जरातिगाय वीर्य्याय वेद्याय व्यापिने नमः । सूर्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥९५॥ चन्द्रकोटि सुशीताय कपिलाय नमो नमः । नमो गूढस्वरूपाय निश्चलाय पराय च

॥९६॥ नमः सत्यप्रतिज्ञाय नमस्ते सुसमाधये। एकरूपाय शून्याय विश्वनाभिहृदाय च ॥९७॥ पूर्वोत्तमाय लोकाय प्राणाय सुहृदे नमः। नमः पारायणायाथ चिन्मात्राय नमो नमः॥९८॥ ध्यानगम्याय ध्येयाय ध्यानरूपाय ते नमः। नमस्ते शाश्वतैश्वर्यविभवाय नमो नमः॥९९॥ नमः प्राणेश्वरायाथ सर्वशक्तिधराय च। धर्माधाराय धन्याय पुष्कलाय नमो नमः ॥ १०० ॥ प्रतिष्ठायै धर्म्मगोप्त्रे निधनायाग्रजाय च। योगेश्वराय योगाय योगगम्याय ते नमः ॥ १०१ ॥ महेन्द्रोपेन्द्र चन्द्रार्कनमिताय नमो नमः। महर्षिवन्दितायाथ प्रकाशाय सुधर्मिणे ॥१०२॥ नमो हिरण्यगर्भाय नमो हिरण्मयाय च। जगद्वीजाय हाराय सेव्याय क्रतवे नमः ॥ १०३ ॥ आधिपत्याय कामाय स्वराय यशसे नमः। नमः प्रचेतसे ब्रह्ममयाय सकलाय च ॥१०४॥

नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये। योगात्मनेऽचिन्तिताय दि-
व्यनृत्याय ते नमः ॥१०५॥ जगतामेकनाथाय मायाबीजाय ते नमः।
सर्वहृत्सन्निविष्टाय ब्रह्मचक्रभ्रमाय च ॥ १०६ ॥ ब्रह्मानन्दाय भवते
ब्रह्मण्याय नमो नमः। भूमिभारातिसंहर्त्रे भवसारथये नमः ॥१०७॥
हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च। दुर्वाससे षड्विकार रहिताय
नमो नमः ॥ १०८ ॥ नमो देहार्द्धकान्ताय षड्उर्मिरहिताय च।
प्रकृत्यै भवनाशाय ताम्राय परमेष्ठिने ॥ १०९ ॥ अनन्तकोटिब्रह्मा-
ण्डनायकाय नमो नमः। एकाकिने निर्मलाय द्रविणाय दमाय च
॥ ११० ॥ नमस्त्रिलोचनायाथ शिपिविष्टाय बन्धवे। त्रिविष्टपेश्व-
रायाथ नमो व्याघ्रेश्वराय च ॥१११॥ विश्वेश्वराय दात्रे ते नमश्चण्डे-
श्वराय च। व्यासेश्वराय बुधिने कण्डुकेशाय ते नमः ॥११२॥

नमो योगेश्वरायाथ दिवोदासेश्वराय च। नागेश्वराय न्यायाय न्याय-
निर्वाहकाय च ॥ ११३ ॥ शरण्याय सुपात्राय कालचक्रप्रवर्तिने।
विचक्षणाय दंष्ट्राय श्वेताश्वाय नमो नमः ॥११४॥ नीलजीमूतदेहाय
परात्मज्योतिषे नमः। शरणागतपालाय महाबलपराय च ॥११५॥
सर्वपापहरायाथ महानादाय ते नमः। कृष्णस्य जयदात्रे ते बिल्व-
केशाय ते नमः ॥ ११६ ॥ दिव्यभोगाय दण्डाय कोविदाय नमो
नमः। कामपालाय चित्राय विचित्राय नमो नमः ॥ ११७ ॥ नमो
मातामहायाथ नमस्ते मातरिश्वने। निःसंगाय सुनेत्राय विघ्नेशाय
जयाय च ॥ ११ ॥ व्याजसंमर्दनायाथ मध्यस्थाय नमो नमः।
अंगुष्ठशिरसा लंकानाथदर्पहराय च ॥ ११९ ॥ व्याघ्रपूरनिवासाय
नमः सर्वेश्वराय च। नमः परावरेशाय जगत्स्थावरमूर्तये ॥१२०॥

नमोऽप्यणुप्रमेयाय शार्ङ्गिणे विष्णुमूर्तये। नारायणाय वामाय सुदीप्ताय नमो नमः ॥१२१॥ नमो ब्रह्माण्डमालाय गोधराय वरूथिने। घंटानादाय सूत्राय नमः पातालवासिने ॥ १२२ ॥ नमस्ताराधिनाथाय वागीशाय नमो नमः। सदाचाराय गौराय पुराणपुरुषाय च ॥१२३॥ संसारमोचकायाथ वर्णिने लिंगरूपिणे। सच्चिदानन्दरूपाय पापराशिहराय च ॥१२४॥ अतर्क्याय प्रमेयाय प्रमाणाय नमो नमः। कलिग्रासाय भक्तानां भुक्तिमुक्तिप्रदायिने ॥ १२५ ॥ गजारये विदेहाय त्रिलिंगरहिताय च। अचिन्त्यशक्तयेऽलंघ्यशासनायाच्युताय च ॥ १२६ ॥ नमो राजाधिराजाय चैतन्यविभवाय च। नमः शुद्धात्मने ब्रह्मज्योतिषे स्वस्तिदाय च ॥१२७॥ मयोभवे च दुर्ज्ञाय समर्थाय च यज्वने। चक्रेश्वराय रुचये नमो नक्षत्रमालिने ॥१२८॥

अनर्थनाशकायाथ भस्मलेपकराय च। सदानन्दाय विदुषे सुगुणाय
विरोधिने ॥ १२९ ॥ दुर्गमाय शुभांगाय मृगव्याधाय ते नमः ।
प्रियाय धर्म्मधाम्ने ते प्रयोगाय विभागिने ॥ १३० ॥ आद्यायामृत
पानाय सोमपाय तपस्विने । नमो विचित्रवेषाय पुष्टिसंवर्द्धनाय च
॥ १३१ ॥ चिरन्तनाय धनुषे स्थविराय ध्रुवाय च । नियमायाग्र-
गण्याय व्योमातीताय ते नमः ॥१३२॥ संवत्सराय लोप्याय स्थान-
दायस्थविष्णवे । व्यवसायाफलान्ताय महाकर्त्रे प्रियाय च ॥१३३॥
गुणत्रयस्वरूपाय नमः सिद्धिस्वरूपिणे । नमो नमः स्वरूपाय स्वे-
च्छाय पुरुषाय च ॥ १३४ ॥ कालान्तराय वेदाय नमो ब्रह्माण्ड-
रूपिणे । अनित्यनित्यरूपाय तदन्तर्वर्तिने नमः ॥१३५॥ नमस्ती-
र्थाय कुल्याय पुण्याय पटवे नमः । पंचतन्मात्ररूपाय पंचकर्मेन्द्रि-

यात्मने। विशृंखलाय तूर्णाय नमस्ते विषयात्मने ॥१३६॥ अनवद्याय शास्त्राय स्वतन्त्रायामृताय च। नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः ॥१३७॥ मंत्रज्ञाय प्रभावाय प्रदीपविमलाय च। विश्वावासाय यक्षाय वेदनिःश्वसिताय च ॥१३८॥ यज्ञांगाय सुवीराय नागचूडाय ते नमः। व्याघ्राय बाणहस्ताय स्कन्धाय पक्षिणे नमः ॥ १३९ ॥ क्षेत्रज्ञाय रहस्याय स्वास्थाय च वरीयसे। गहनाय विरामाय सिद्धान्ताय नमो नमः ॥१४०॥ महीधराय होत्रे ते वटवृक्षाय ते नमः। ज्ञान-दीपाय दुर्गाय सिद्धान्तनिश्चयाय च। श्रीमते मुक्तिबीजाय कुश-लाय विलासिने ॥१४१॥ प्रेरकाय विशोकाय हविर्द्धानाय ते नमः। गंभीराय सहायाय भोजनाय सुभोगिने ॥ १४२ ॥ महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे। नमः प्रतिष्ठितायाथ महोत्साहाय ते

नमः ॥१४३॥ परमार्थाय शिशवे प्रांशवे च कपालिने । सहजाय गृहस्थाय संध्यानाथाय जिष्णवे ॥ १४४ ॥ षड्भिः संपूजितायाथ विदलासुरघातिने । जनानन्दाय योग्याय कामेशाय किरीटिने ॥ १४५ ॥ अमोघविक्रमायाथ नग्नाय दलघातिने । संग्रामाय नरेशाय शुचिहास्याय ते नमः । भूतिप्रियाय भूम्ने ते श्येनाय मधुराय च ॥ १४६ ॥ मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने । निर्लेपाय जटार्द्राय महाकालाय भीरवे ॥१४७॥ नमो विरूपरूपाय शक्तिगम्याय ते नमः । नमः सर्वाय सदसत्पराय सुव्रताय च ॥१४८॥ नमो भक्तिप्रियायाथ श्वेतरक्षापराय च । सुकुमारमहापापहराय रथिने नमः ॥१४९॥ नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये । महाभूताय कल्पाय कल्पनारहिताय च ॥ १५० ॥ ख्याताय जित-

विश्वाय गोकर्णाय सुचारवे। श्रोत्रियाय वदान्याय दुर्बलाय कुटुम्बिने ॥ १५१ ॥ विरजाय सुगन्धाय नमो विश्वम्भराय च। भवातीताय षष्ठाय नमस्ते सामगाय च ॥१५२॥ अद्वैताय द्वितीयाय कल्पराजायभोगिने। चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥ १५३ ॥ सर्वभोग समृद्धाय खाम्बराय नमो नमः। नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥ १५४ ॥ सर्वज्ञमूर्तये तुभ्यं हिरण्यरेतसे नमः। शारदाय सुशीलाय कामिकाय धनाय च॥१५५॥ अभिरामाय तत्त्वाय व्यालकल्पाय ते नमः। अरिष्टमथनायाथ सुप्रतीकाय ते नमः ॥ १५६ ॥ आशवे ब्रह्मगर्भाय वरुणायेन्द्रये नमः। नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥१५७॥ अहिर्बुध्न्यायाजराय गुह्येशाय सुशान्तये। नमः समयनाथाय सोमपाय गुहाय

च ॥१५८॥ निर्लंघ्याय नमस्तुभ्यं छन्दसाराय दंष्ट्रिणे। ज्योतिर्लिंगाय मित्राय जगत्सुहितकारिणे ॥ १५९ ॥ नमः कारुण्यनिधये श्लोकाय जयशालिने। ज्ञानोदराय बीजाय जनविश्रमहेतवे ॥ १६० ॥ अवधूताय शिष्टाय छन्दसां प्रभवे नमः। नमः फेण्याय गुह्याय सर्वबन्धविमोचिने ॥ १६१ ॥ उदारकीर्तये शश्वत् प्रसन्नवदनाय च। वसवे वेदकाराय नमो भ्राजिष्णुविष्णवे ॥१६२॥ चक्रिणे देव-देवाय गदाहस्ताय पुत्रिणे। नमस्ते पारिजाताय गणाधिपतये नमः ॥१६३॥ सर्वशाखाधिपतये प्रजनेशाय ते नमः। सूक्ष्मप्रमाणभूताय सुरपार्श्वगताय च ॥१६४॥ अशरीराय शुक्राय सर्वान्तर्यामिणे नमः। सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥१६५॥ मुनिध्येयाय मुनये बीजस्थाय मरीचये। चामुण्डाजनकायाथ नमस्ते कृत्तिवाससे

॥१६६॥ व्योमकेशाय योग्याय धर्मपीठाय ते नमः। महावीर्याय दीप्ताय बुद्धाय शनये नमः ॥१६७॥ शिष्टेष्टाय मघवते केतवे करुणाय च। कारणाय भगवते बाणदर्पहराय च ॥ १६८ ॥ अतीन्द्रियाय रम्याय ज्ञानानन्दकराय च। सदाशिवाय धौम्याय चिन्त्याय चन्द्रमौलिने ॥ १६९ ॥ नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः। ज्योतिषे कुण्डलीशाय वरदायाचलाय च ॥ १७० ॥ वसन्ताय सुरभये जयारिमथनाय च। प्रेतपुरञ्जयायाथ पृषदश्वाय ते नमः ॥ १७१ ॥ रोचिष्णवे सुरजिते श्वेतपीताय ते नमः। नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥ १७२ ॥ प्रमाथिने निदाघाय चित्रगर्भाय ते नमः। शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥१७३॥ निरवद्याय दानाय विचित्रशक्तये नमः। नमस्तुल्याय महसे वितानपतये नमः ॥ १७४ ॥ अहंकारस्वरूपाय मेधाधिपतये नमः।

विक्रमाय स्वतंत्राय स्वतंत्रगतये नमः ।। १७५।। अपाराय तत्त्व-
विदे क्षयद्वीराय ते नमः । पंचास्याय वदान्याय विश्वप्राणेश्वराय च
।। १७६ ।। अगोचराय सूक्ष्माय ज्ञेयाय वडवाग्नये । फेण्याय पद्म-
हस्ताय नमस्ते जमदग्नये ।। १७७।। अनावृताय मुक्ताय मातृका-
पतये नमः । नमस्ते बीजकोशाय तीव्रानन्दाय मुक्तये ।।१७८।।
नमस्ते विश्वदेवाय शान्तरागाय ते नमः । विलोचनाय तोयाय
हेमगर्भाय ते नमः ।। १७९ ।। अनाद्यन्ताय चण्डाय मनोनाथाय
ते नमः । ज्ञानस्कन्धाय तुष्टाय कपिलाय महर्षये ।। १८० ।। नम-
स्त्रिकाग्निकालाय देवसिंहाय ते नमः । नमस्ते मणिपूराय चतुर्वेदाय ते
नमः ।।१८१।। स्वभावाय सुवासाय ह्यनन्तरंगाय ते नमः । नमस्ते
शिवधर्माय महाधर्माय ते नमः ।।१८२।। प्रसन्नाय नमस्तुभ्यं सर्वान्त-
र्ज्योतिषे नमः । स्वयम्भुवे कुलेशाय यक्षराक्षसमन्महे ।।१८३।।

( फलस्तुति ) श्रीमहादेव उवाच—

जपन्तु सततं देवा नाम्नां दशशतीमिमाम् । मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥१८४॥ संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम् । यःपठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ १८५ ॥ पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राज्यताम् । प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥ १८६ ॥ शिवालये नदीतीरेऽश्वत्थमूले विशेषतः । प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥ १८७ ॥ धनकामस्तु जुहुयाद्दुग्धसाक्तैर्बिल्वपत्रकैः । मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥ १८८ ॥ पुत्रकामस्तु जुहुयात् तिलाज्येन तथाऽन्धसा । आयुःकामस्तु जुहुयादाज्येन मधुना तथा ॥ १८९ ॥ मत्समीपे प्रदोषे च स्पृष्ट्वा भक्त्या जपत्यथ । जीवन्सरूपतां प्रेत्य सायुज्यं समवाप्नुयात् ॥ १९० ॥ कालोऽपि जनशास्ता हि मम भक्तं न लुम्पति । अहं स्वामी सुरास्तस्य नेष्यामि गतकल्मषम् ॥ १९१ ॥ त्रिसन्ध्यासु जपेद्भक्त्या वत्सरं नियमान्वितः । मच्चित्तो मन्मना भूत्वा सर्वरोगैः प्रमुच्यते ॥ १९२ ॥ रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः । तत्सर्वं प्राप्यते पुंभिरेकाग्रमनसाऽमराः ॥ १९३ ॥ अश्वमेधसहस्रस्य यत्फलं लभते नरः । कपिलाशत-

दानस्य तत्फलं पठनाद्भवेत् ॥ १९४ ॥ कन्याकोटिप्रदानस्य यत्फलं लभते नरः । तत्फलं लभते सम्यङ्नाम्नां दशशतीजपात् ॥ १९५ ॥ यः शृणोति महाविद्यां श्रावयेद्वाऽपि भक्तितः । सोऽपि मुक्तिमवाप्नोति यत्र गत्वा न शोचति ॥ १९६ ॥ यक्ष-राक्षसवेतालग्रहकूष्माण्डभैरवाः । पठनादस्य नश्यंति जीवेव शरदां शतम् ॥ १९७ ॥ ब्रह्महत्यादिपापानां नाशः स्याच्छ्रवणेन च । किं पुनः पठनादस्य मुक्तिःस्यादन-पायिनी ॥ १९८ ॥ इत्युक्त्वा स महादेवो भगवान् परमेश्वरः । पुनरप्याह भगवान्कृपया परया युतः ॥ १९९ ॥ दीयतामात्मभक्तेभ्यो मदुक्तं भवघातकम् । इत्युक्त्वान्तर्दधे देवः परमानन्दरूपवान् ॥२००॥

श्रीकृष्ण उवाच—

एतदेव पुरा रामो लब्धवान्कुम्भसंभवात् । अरण्ये दण्डकाख्ये तु प्रजजाप रघूद्वहः ॥२०१॥ नित्यं त्रिषवणस्नायी त्रिसन्ध्यं संस्मरं शिवम् । तदासो देवदेवोऽपि प्रत्यक्षं प्राह राघवम् ॥ २०२ ॥ इदं पाशुपतं दिव्यं प्रगृहाण रघूद्वह । एतदासाद्य पौलस्त्यं जहि मा शोकमर्हसि ॥ २०३ ॥ तदाप्रभृति भो देवाः प्रजपामि सुभक्तितः । गृह्णन्तु परया भक्त्या भवन्तः सर्व एव हि ॥२०४॥

श्रीवेदव्यास उवाच—

ततस्ते ऋषयः सर्वे जगृहुर्मुनिपुंगवाः । सहस्रनामसद्विद्यां भक्तियुक्तेन चेतसा ॥ २०५ ॥ एतद्वः कथितं सर्वं हितार्थं मुनिसत्तमाः । गृह्णन्तु मम वाक्येन मुक्तिं प्राप्स्यथ निश्चितम् ॥ २०६ ॥ भवद्भिरात्मशिष्येभ्यो दीयतामिदमादरात् । नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥ २०७॥ अविमुक्तं तु तद्गेहं तत्र तिष्ठति शंकरः । अनेनमंत्रितं भस्म दुष्टदुःखविघातकृन् ॥ २०८ ॥ पिशाचस्य विनाशाय जप्तव्यमिदमुत्तमम् । नाम्नां तेन सहस्रेण समं किंचिन्न विद्यते ॥ २०९ ॥

इति श्रीपद्मपुराणे उत्तरखण्डे शंकरसंहितायां श्रीकृष्णमार्कण्डेयसंवादे वेदसाराख्यं परमदिव्यशिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥

* श्रीः *

## पं० काशीनाथ शर्मा द्वारा आदित्य प्रकाशन से प्रकाशित कुछ पुस्तकें

| | | |
|---|---|---|
| गणेश आपा पंचांग बड़ा | | ६)२५ |
| ,, ,, छोटा | | ३)२५ |
| सत्यनारायण व्रत कथा भा० टी० ५ अध्याय | | १)६० |
| सत्यनारायण भा० टी० ७ अध्यायी | | १)८० |
| सत्यनारायण भाषा | | १)२० |
| रामायण सुन्दरकांड मूल ( मोटा अक्षर ) | | ३)५० |
| रुद्रीमूल १६ पेजी मोटा अक्षर | | ५)०० |
| रुद्री भा० टी० | | १६)०० |
| शिवमहिम्न शिवताण्डवसहित | | १)०० |
| होड़ाचक्र बड़ा भा० टी० | ... | ८)५० |
| शीघ्रबोध भा० टी० | ... | ७)५० |
| पुरुषसूक्त श्रीसूक्त लक्ष्मीसूक्त भा० टी० | | १)५० |
| राशिमाला भाषा | ... | )६० |

| | | |
|---|---|---|
| चाणक्यनीति दर्पण भा० टी० | ... | ५)५० |
| एकादशी महात्म भाषा (मोटा अक्षर) | | ८)०० |
| विष्णु सहस्रनाम मूल मोटा अक्षर | ... | १)५० |
| हरितालिका भा० टी० (पूजन विधान] | | २)०० |
| रुद्रीमूल ३२ पेजी ( सविधि ) | ... | ३)५० |
| गोपाल सहस्रनाम मूल मोटा अक्षर | | १)५० |
| गोपाल भा० टी० | ... | [illegible] |
| मानसागरी भा० टी० | .... | [illegible] |
| दुर्गा भाषा | ... | [illegible] |
| दुर्गा कवच भा० टी० | .. | [illegible] |
| दुर्गा मूल १६ पेजी ( मोटा अक्षर ) जि० | | ३)०० |
| ,, अजिल्द खुलापन्ना | ... | ६)०० |
| दुर्गा भा० टी० ( मोटा अक्षर ) | | १६)०० |

**वितरक-श्रीराजराजेश्वरी पुस्तकालय, भैरोनाथ-वाराणसी**